# विवेकभास्करः

## संस्कृतविभागीयभित्तिपत्रिका

रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोधसंस्थानम्, बेलुड़मठः


उद्घाटकः - स्वामी-परमहंसानन्दः

निर्देशकः - ड. श्रीवेङ्कटरमणभट्टः, प्राध्यापकः, संस्कृताध्ययनविभागः

सम्पादकः - श्रीउत्तमघोषः, शोधच्छात्रः

आलङ्कारिकः - श्रीसोमनाथवर्मनः, स्नातकोत्तरद्वितीयवर्षीयः छात्रः

वर्षम् - ०७, अङ्कः-१८, विषयः - **पवित्रनदीपरिचयः**

प्रकाशनदिनाङ्कः - २६.०५.२०२२, वासरः - सोमवासरः

# सम्पादकीयम्

आसमुद्रहिमाचलव्याप्तविशालोऽस्माकं देशः। मरुजनपदकाननारण्यभूधरादिभूषतेऽस्मिन् भारते सर्वत्र प्राणवायुरिव वहन्ति गङ्गागोदावर्यादिनद्यः। अस्माकीनसभ्यताया मूलं सिन्धुरेव। धरणिध्वंसननिर्वेदेन जगद्रिरक्षिषुर्महासिन्धुः प्रप्रथमं स्वकोडे जनपदं निर्ममौ। क्वचित् रिङ्गत्तरङ्गभङ्गा गङ्गा उत्तुङ्गहिमालयात् प्रवहन्ती प्रदेशान् पवित्रयन्ती पारावारं प्रविशति। सकलतीर्थानामकरभूमिश्च गोदावरी। त्र्यम्बकात्समुत्पन्ना त्र्यम्बकेश्वरादि-ज्योतिर्लिङ्गलिङ्गिता त्र्यम्बकवरबलीयसी गोदावरी स्वतटनिवासिमुमुक्षु-भिस्सर्वात्मानमभिमानयन्ती।

विहङ्गकुलाक्रमणविनतशाखशाखिसमूहशोभिता स्वनिविडपक्षिकुलकूजनकलरवेन दिशं ध्वनयन्ती कावेरी पर्वतबहुलमपि दक्षिणदेशं सरसं सस्यश्यामलञ्च विदधाति। यमुनायाः का कथा- स्वात्मजवासुदेवरक्षण-व्रतिवसुदेवचरणपूण्डरीकपरमपूता सेयं पयःपूरितप्रबलोर्मिप्रचुरा स्रोतस्विनी यमुना स्वपावित्र्येण नो हृदयनिहिता।

किं बहुना शुष्कपाषाणप्रबलमरुप्राय-मध्यप्रदेशेऽपि निर्झर-झर्झरध्वनिना दिगन्तरालं मुखरयन्ती शान्तं प्रवहमाना निर्मला नर्मदा सततं प्राणान् सञ्चारयन्ति जीवेषु जीवान् जीवयन्ति। अतः नदीं विना जीवनमसम्भवमिति पवित्रनदीपरिचयनामके अस्मिन् प्रबन्धे गङ्गे च यमुने चैव इत्यागमवचनमनुसन्धाय अस्माभिः पवित्रतमाः गङ्गा-यमुना-गोदावरी-नर्मदा-सिन्धु-कावेर्यः षट् नद्यः परिचयार्थं चिताः। तदास्माकीननिवेदनमिदं सचेतश्चित्तचमत्कारं जनयेदिति भूतेशं भूतनाथं सम्प्रार्थ्य विरम्यते।

***

# गङ्गा

**- सैकतमोहन्तः**

**देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे।**
**शङ्करमौलिनिवासिनि विमले मम मतिरास्तां तव पदकमले।।**

नदीमातृकेयं भारतभूः। आकाश्मीरात् कन्याकुमारीम् आगुजरातः अरुणाचलं यावत् सुमधुरकल्लोध्वनिं कुर्वत्यः प्रवहन्ति नैकाः सरितः। तासु अन्यतमा पतितोद्धारिणी पतितनिवारिणी हरिपदपाद्यतरङ्गिणी पूतसलिला गङ्गा।

**गङ्गोत्पत्तिकथा**- गङ्गायाः अवतरणवर्णनं महर्षिवाल्मीकिविरचितरामायणस्य बालकाण्डे राजते। तत्र अयोध्यानरेशस्य धर्मात्मनः सगराभिधेयस्य वृत्तान्तो वर्तते। अयोध्याधिपतिः धर्मात्मा सगरः अप्रजः आसीत्। कठोरतपसा सन्तुष्टस्य महर्षिभृगोः प्रसादात् सगरस्य प्रथमपत्न्या केशिन्या असमञ्जाभिधेय एकः पुत्रः, द्वितीयपत्न्या सुमत्या षष्ठिसहस्रं पुत्राः लब्धाः। असमञ्जस्य दुराचारं प्रेक्ष्य सगरेण स राज्यात् बहिष्कृतः। तस्य पुत्रः अंशुमान् प्रियंवदः वीर्यवान् च अभूत्। कदाचित् राज्ञा सगरेण यागाय निश्चितम्। तस्मिन् यज्ञे यज्ञियः अश्वः इन्द्रेण राक्षसीं तनुमास्थाय अपहृतः। तस्य अन्वेषणाय सगरेण षष्ठिसहस्रपुत्राः प्रेषिताः। सर्वासु दिक्षु तमश्वम् अन्वीक्षमाणाः सगरपुत्राः कपिलाश्रमे चरन्तम् अश्वमेकं दृष्ट्वा क्रुद्धाः महर्षिम् अपशब्दान् अकथयन्। तेन क्रुद्धः महर्षिः हुङ्कारमात्रेण षष्ठिसहस्रपुत्रान् भस्मसाच्चकार। पुत्रान् अन्वेष्टुं प्रेषितः अंशुमान् देहावशेषभस्मादिकं संप्रेक्ष्य नितरां दुःखितो जलेन तितर्पिषुः कञ्चिदपि जलाशयं नापश्यत्। तदा पक्षिराजः वैनतेयो गरुडः तत्रागत्य गाङ्गेयवारिणा तर्पणाय उपादिशत्। अंशुमान् प्रत्यागत्य समग्रे वृत्तान्ते सगराय निवेदिते स महति दुःखे निमग्नः तत्पुत्राणां परित्राणाय कमपि उपायम् अप्राप्य त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः। ततः महता कालेन सगरपुत्रः अंशुमान् घोरतपस्यां कुर्वन् शरीरं तत्याज। ततः अंशुमतः पुत्रः दिलीपः सर्वदा गङ्गावतरणं चिन्तयन् दिनानि अनैषीत्। तस्य पुत्रः भगीरथः ऊर्ध्वबाहुः सन् गङ्गावतरणाय गोकर्णतीर्थे महत् तपः प्रारभत। वर्षसहस्राणि व्याप्य कृतेन तपसा सन्तुष्टः ब्रह्मा तस्मै वररूपेण गङ्गानयनं वंशधारकं पुत्रं च प्रादात्। अपि च गङ्गाधाराया वेगस्य धारणाय भगवतः शङ्करस्य आराधनाय उपादिशत्। एवं त्रिपुरारिम् आराध्य गङ्गाम् अवतारयितुं प्राचेष्टत। शाङ्करजटासामर्थ्यम् अज्ञात्वा परमदुर्धरा गङ्गा शिवजटाजाले समाहिता। तादृशीं स्थितिं प्रेक्ष्य भगीरथेन पूजितेन महादेवेन मुक्ता गङ्गा सप्तधारया भुवि प्रावहत्। पूर्वस्यां दिशि ह्लादिनी, पावनी, नलिनी इति नामभिः तिस्रः धाराः गताः, प्रतीच्यां सुचक्षुः, सीता, महानदी सिन्धुः इति



नामभिः तिस्त्रः धाराः निःसृताः। सप्तमी धारा भगीरथस्य स्यन्दनम् अनुससार। मध्येमार्गं महर्षिजह्नोः यज्ञवाटं प्लावयामास। क्रुद्धः स महर्षिः समग्रां गङ्गाम् अपिबत्। ततः देवैः गन्धर्वैः ऋषिभिश्च प्रार्थितः

महर्षिजह्नुः श्रोत्राभ्यां समग्राः अपः असृजत्। ततः प्रभृति गङ्गेयं जाह्नवीति नाम्ना ख्याता। एवं गाङ्गेयवारिणा पूताः सगरस्य षष्ठिसहस्रपुत्राः स्वर्लोकं जग्मुः। ततः ब्रह्मा भगीरथपुत्ररूपेण नदीयं विश्रुता भविष्यतीति वरं प्रादात्। तथा च रामायणे-

**इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति।**
**त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता।।१.४४.५।।**

ततः प्रभृति गङ्गेयं भागीरथीति नाम्ना प्रसिद्धा अभूत्। एवं गङ्गोत्पत्तिकथा श्रीमद्वाल्मीकीयरामायणे वर्णिता।

**गङ्गास्वरूपम्** - हिमालयस्य गङ्गोत्रीप्रदेशात् प्रवहमाना नदीयं भारतं बङ्गदेशं च अतिक्रम्य पश्चिमबङ्गस्य सुन्दरवनप्रदेशे बङ्गोपसागरेण एकीभवति। इयं नदी २५२५किलोमिटरपरिमतं मार्गम् अतिक्रामति। विविधाः नद्यः गङ्गानद्या सह मिलिताः नद्यः आकारं वर्धयन्त्यः सन्ति। दक्षिणदिग्भागतः समागताः रामगङ्गा, सरयूः, ताप्ती, गण्डकः, कोसी, काक्षी इत्येताः सरितः, वामभागतः समागताः यमुना, चम्बलः, सोनः, बेतवा, केनः इत्येताः सरितः गङ्ग्या सह मिलिताः प्रवहन्ति।

**गङ्गायाः मानवजीवने विशेषता**- नदीमिमाम् आश्रित्य जनाः तत्तीरे सस्यारोपणं, वाणिज्यं, भवननिर्माणं च कुर्वन्ति, धीवराश्च मत्स्याहरणं कुर्वन्तः स्वजीविकां निर्वहन्ति। नदीमिमाम् आश्रत्यैव विविधानि तीर्थस्थानानि विराजन्ते। हृषीकेशः, हरिद्वारः, वाराणसी, कोलिकातायां दक्षिणेश्वरः इत्येतानि प्रसिद्धानि तीर्थस्थलानि जाह्नवीतीरे विराजन्ते। भागीरथी अलकानन्दा च गङ्गानद्या सह मिलिते देवप्रयागनाम्ना तीर्थस्थलं चक्रतुः। एवं नदीयं यथा आर्थिकदृष्ट्या मनुष्याणां जीवने महत् स्थलमेकम् अधिचकार तथैव आध्यात्मिकदृष्ट्यापि। तस्य तटः साक्षात् वैकुण्ठः। तथा चोक्तं गङ्गास्तोत्रे श्रीमच्छङ्कराचार्येण-

**तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः।। इति शम्।**

***

# यमुना

**- सौरभपोडेलः**

**नमो मात्रे पृथिव्यै, नमो मात्रे पृथिव्याः।।**

भूमिका- नद्यम्बुपालितत्वान्नदीमातृकोऽयं हि नो देशो भारतवर्षम्। उक्तञ्चामरकोषे- देशो नद्यम्बुवृष्ट्य-म्बुसम्पन्नव्रीहिपालित इति।

**स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्।। इति।**

आभारतं मानवदेहस्थनाडिधमनीवत् स्वोपनदीशाखानद्यादिविस्तारेण चतुश्शताधिकाः नद्यः तीरमुभयतः स्थितानां मनुष्यारण्यपशुपश्वादीनां सर्वेषामपि यथेष्टं हितं साधयन्त्यः स्वजनिस्थानादारभ्य समुद्रं प्रति मानसोल्लासिनं कल्लोलध्वनिं कुर्वन्त्यः प्रवहन्त्यः सन्ति। सतीष्वपि चतुश्शताधिकासु तटिनीषु सप्तैव स्रोतस्विन्यः आस्माकीनसनातनधर्मेषु पवित्रतमाः सन्ति। तथा चोक्तं-

**गङ्गे च यमुने चैव गोदावरि सरस्वति।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु।। इति।**

एतास्वपि तरङ्गिणीषु गङ्गायमुने पुराणाद्याधारेण अधिकप्राधान्यं भजेते।

उत्पत्त्यादिवर्णनम्- यमुना गङ्गानद्याः बृहत्तमोपनदी। कालिन्दी, सूर्यतनया, शमनस्वसा चेत्यादि अस्याः नामान्तरम्। तथाह्युक्तममरकोषे-

कालिन्दी सूर्यतनया यमुना शमनस्वसा।। इति।

उत्तराखण्डस्य उत्तरकाशीमण्डलस्य समुद्रपृष्ठात्प्रायः सप्ताशीत्यधिकत्रिशताधिकषट्सहस्रमानोन्नतौ अवस्थितस्य हिमालयस्याधस्तनस्य मुसौरिगिरिजालस्य वान्देरपुञ्चचूडायाः समीपे अवस्थिताद्यमुनोत्रीहिमवाहात् यमुनेयमुत्पन्ना। उत्सोद्भूतात्परं इयं निम्नहिमालयस्य द्विशतयोजनपर्यन्तं प्रवहणादनन्तरं इन्दोगाङ्गेयसमभूमौ उत्थिता। इन्दोगाङ्गेयसमभूमौ प्रवेशात्पूर्वं काश्चन प्रधानस्रोतस्विन्यः अस्यां सम्मिलिताः भवन्ति। ततः सम्मिलितप्रवाहरूपेयं यमुना हिमाचलप्रदेशस्य उत्तराखण्डस्य च शिवालिकगिरिजालादितः प्रवहणादनन्तरम् उत्तराखण्डस्य डाक्पाथरसमभूमौ प्रविष्टा। अत्र च सम्पूर्णेयं नदी जलविद्युन्निर्माणार्थमेकया कुल्यया (Canal) प्रवाहिता। ततः शिखधर्मीयोपासनस्थलात् पोन्तासाहेवात् प्रवहणादनन्तरं हरियाणायाः यमुनानगरमण्डलस्य समीपे जलसेचनार्थमियं



पश्चिमयमुनारूपेण पूर्वयमुनारूपेण च विभक्ता। तदनन्तरं चतुर्विंशत्यधिकद्विशततमयोजनपर्यन्तं प्रवहणादनन्तरं पाल्लाग्रामस्य समीपे इयं देहल्यां प्रविशति। ततः आग्रायाः ताजसौधस्य पार्श्वतः प्रवहन्तीयं मथुरायां प्रवेशादनन्तरं प्रयागराजक्षेत्रे गङ्गया समं सम्मिलिता भवति। उत्पत्तेरारभ्य प्रयागराजपर्यन्तं यमुनायाः दैर्घ्यं षट्सप्तत्यधिकत्रिशताधिकैकसहस्रकिलोमिटर्परिमितं (१३७६ किमि), प्रवहणस्थलं च त्रयोविंशत्यधिक-द्विशताधिकषट्षष्टिसहस्राधिकत्रिलक्षवर्गकिलोमिटर्परिमितमस्ति (३६६,२२३ वर्गकिमि)। यमुनायाः बह्व्यः उपनद्यः सन्ति। आदौ सप्तत्यधिकैकशततमकिमिपर्यन्तं प्रसारितायाम् अस्यां ऋषिगङ्गाकुन्ता हनुमान्गङ्गा टननदी गिरिनदी च सम्मिलिता। ततः चम्बलसिन्धुवेतोयाकेनप्रभृत्यः महानद्योऽपि सम्मिलिताः।

**पौराणिकतथ्यम्** - भगवतः गोपरमणीरमकस्य श्रीकृष्णस्य लीलाक्षेत्रस्य मथुरायाः पार्श्वतः एव इयं यमुना प्रवहति स्म इति हि प्रसिद्धिः। पापेन कंसेन कारागारे आबद्धाया देवक्या गर्भात् जनेरनन्तरं वसुदेवः सद्योजातस्य तेजोमयस्य शिशोः तस्य हननाद्रक्षणार्थं पालनार्थञ्च करालकालरूपां तरङ्गमयीं यमुनां घोरान्धकारे अवतीर्य स्वमित्रनन्दस्य पत्न्याः यशोदायाः शयने सद्यःप्रस्फुटितं पुष्पमिव सौन्दर्ययुक्तं श्रीकृष्णं प्रदाय तत्सुतामुपादाय च पुनः कारागारम् आगात्। तथाह्युक्तं भागवते -

**मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौघजवोर्मिफेनिला।**
**भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः।।**
**नन्दव्रजं शौरिरुपेत्य तत्र तां गोपान् प्रसुप्तानुपलभ्य निद्रया।**
**सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात्।।**

यौवने च मित्रैः सह क्रीडनसमये यमुनायाः कन्दुकं स्वीकर्तुमवतीर्य यमुनायां स्थितं कालसर्पं स्वदिव्यलीलया पराजित्य ततः दूरीकृतवान् भगवान् श्रीकृष्णः। एवं बहुविधाः लीलाः भगवान् श्रीकृष्णः यमुनानद्यां चकार।

इयं हि यमना सूर्यतनया यमस्वसा चासीत् इत्यपि पुराणप्रसिद्धिः।

साम्प्रतिकावस्था- एवंभूतमाहात्म्यस्य धारिकायाः यमुनायाः अस्याः रक्षणं तु दूरमेव, अपि तु ध्वंसनमेव दूषणादिद्वारा नदीमुभयतः स्थितैः जनैः स्वसभ्यतायाः उन्नत्यै यथेष्टं नक्तन्दिवं क्रियते वर्ज्यपदार्थानां त्यागेन अन्येन च भिन्नेन दुर्माध्यमेन। परन्तु सनातनधर्मस्य प्राणभूताया अस्याः संरक्षणं तु अस्माभिरेव कर्तव्यम्, नो चेत् को वा अन्यः एतत्कुर्यात्। अतः अस्माभिः सर्वैरपि बद्धपरिकरैर्भाव्यमस्य संरक्षार्थमिति शिवम्।

***

# गोदावरी

- तन्मयवाग्ची

**सौभाग्यदा भारतवर्षधात्री सौभाग्यभूता जगतो विधात्री।**
**धात्री प्रबोधस्य महामहोदा गोदावरी सावतु नः सुगोदा।।**

इति वासुदेवसरस्वतीपादैः कृतया गोदावरीस्तोत्रगतवर्णनया गोदावरीदेव्याः माहात्म्यं प्रकाश्यते । चर्वितस्य चर्वणवत् मयापि पुराणशास्त्रोक्तस्य आधुनिकभूगोलशास्त्रोक्तस्य च विस्तरेण आलोचितस्य विषयस्य संक्षेप एव केवलं क्रियते।

पौराणिकदृष्ट्या नदीमातृका देवी गोदावरी -

गोदावरी विषये बहुषु शास्त्रेषु वर्णना प्राप्यते । अत्र ब्रह्मपुराणम् आश्रित्य वर्णनं प्रकाश्यते । गां जलं स्वर्गं वा ददातीति गोदा तासु वरी श्रेष्ठा इति गोदावरी । धूर्जटिजटायां च स्थितायाः गङ्गायाः आख्यानं जिज्ञासुं नारदं प्रति एवमुच्यते- शङ्करप्रेम्णि स्थिता उमादेवी गङ्गाप्रेम्णाकृष्टं महेश्वरं दृष्ट्वा अत्यन्तं क्रुद्धा जाता । देव्युमा महादेवस्य जटाजूटात् गङ्गायाः निष्कासनार्थं जयाविनायकषण्मुखान्। विनायकः जयाकार्तिकाभ्यां साकमुपायमालोचितवान्। त्रिलोकप्रसिद्धः ऋषिः गौतमः एव एतत् कार्यं कर्तुं समर्थः अस्ति इति मातरं प्रति विनायकेन उक्तम् । तदा मातापि उक्तवती यत् तदेव कुरु ।

बहुकालं यावत् अनावृष्टिकारणेन देवगिरिः मरुसदृशो जातः। तदा ब्रह्मा तत्रागत्य पुनः सृष्टियज्ञं चकार । तेन देवगिरिः ब्रह्मगिरिनाम्ना ख्यातः जातः । तत्रैव गौतममहर्षिः उवास । तत्र किमपि दुःखं शोकः रोगश्च न बभूव । एकदा गौतममहर्षेः आश्रमं केचित् ब्राह्मणाः जग्मुः । तान् दृष्ट्वा गौतमः अपि अत्यन्तं हर्षितः जातः। किञ्च तेषु  कांश्चित् पुत्रवत् कांश्चित् शिष्यवत् च सेवमानो बभूव। तत्र ब्राह्मणरूपधारी गणेशः आगत्य तैः साकं किञ्चित् कालं यापितवान् । बहुदिनानि यापितवतां ब्राह्मणानां सकाशं गत्वा तान् उपदिष्टवान् यद् बहुदिनं यावत् परगृहे वासो न करणीय इति । पुनः उक्तवान् वयं गौतमस्य अन्नदासाः इति। तस्मात् गौतमम् उक्त्वा  अस्माभिः इतः गन्तव्यम् । परन्तु तद् श्रुत्वा गौतमः अपि युक्तिं प्रदर्श्य तेषां प्रस्थानेच्छां निवारितवान्।




तदा विनायकः स्ववाक्यमोहितेभ्यः ब्राह्मणेभ्यः अनुमतिं स्वीकृत्वा सर्वहितकारिणमुपायं रचयामास। " त्वं जीर्णगोः रूपं धृत्वा तपोबलेन त्रिलोकप्रसिद्धस्य ब्रह्मगिरिनिवासिनः गौतमऋषेः आश्रमं गत्वा शालीन् खाद विकारं च कुरु । एवं रूपेण विनाशं कुर्वतीं तां गां मुनिः दर्भशस्त्रेण मारितवान्। तदा गोहननपापमपाकर्तुं स

भगवन्तं शङ्करं तोषयित्वा वररूपेण जटास्थां गङ्गां याचितवान्। तया गङ्गया यदि गोमाता सिक्ता भवति तर्हि सा जीविष्यति, एषः एव मार्गः

इति। ऋषिगौतमः कैलासं गत्वा उपसनां चकार । गौतमोपासनया तुष्टः महादेवः सपरिवारः प्रकटितः अभूत्, किञ्च गौतमस्येष्टं वरम् अदात् । हरः स्वजटात् गङ्गां गौतमाय अदात् । ततः तुष्टः महादेवः इतोपि वरद्वयं दत्तवान् । तयोः प्रथमं गौतमविरचितस्तोत्रपाठनेन इष्टपूर्तिः भवतु इति, द्वितीयम्, इयं गङ्गा नदीषु सर्वश्रेष्ठा भवतु इति। देवादिदेवो महेश्वरः अपि तथास्तु इति उक्त्वा तदैव अन्तर्धानं गतः च।

**"सत्यं सत्यं पुनः सत्यं वेदे च परिनिष्ठितम् । सर्वेषां गौतमीपुण्या इत्युक्त्वान्तरधीयत ।।"**

देवी गङ्गा अपि गोदावरीरूपेण ब्रह्मगिरितः वङ्गोपसागरपर्यन्तं प्रवहति। तस्याः बहूनि नामानि सन्ति यथा गौतमी, गङ्गा, मागे श्वरी, वैष्णवी, ब्राह्मी, गोदावरी, नन्दा, सनन्दा चेति। शास्त्रे तस्याः नद्याः अत्यन्तं गुणकीर्तनं कृतमस्ति । सा दक्षिणभारतस्य गङ्गा, अस्साकम् आराध्या । तस्याः कूले यानि बहूनि तीर्थानि उद्भूतानि तेषां अत्यन्तं प्रसिद्धं त्र्यम्बकेश्वरज्योतिर्लिङ्गम् इति। नास्ति अन्तः तस्याः महिम्नः।

**तत्रापि तीर्थयतास्तु तस्मादापः पराः स्मृताः। तासां भागरथीश्रेष्ट्यं ताभ्योऽपि गौतमीतथा ।**

***

# नर्मदा नदी

**- अभिजित्-दासः**

मध्यभारतस्य अन्यतमा नदी नर्मदा। इयं नदी भारतीयोपमहादेशस्य दीर्घतमासु नदीषु पञ्चमं स्थानम् अधिकरोति। देवभाषायां नर्मदाशब्दस्य 'सुखदायिनी' इत्यर्थः। आनन्दप्रदात्री इत्यर्थोऽपि सङ्गच्छते शब्देनानेन। अस्याः उत्पत्तिस्थलम् अमरकण्टकस्य समीपस्थं स्थलम्। मध्यप्रदेशस्य बृहत्तमा नदीयम्। अस्याः प्रसङ्गे उच्यते हि-

**नर्मदा सरितां श्रेष्ठा  रुद्रतेजसः विनिःसृता।**
**तारयेत् सर्वभूतानि स्थावराणि चराणि च।।**

अस्यार्थो हि बह्वीषु नदीषु सरित्सु वा नर्मदा अन्यतमा श्रेष्ठा, सा च नर्मदा रुद्रतेजसः शिवस्य प्रतापात् निष्पन्ना। इयं नर्मदा सर्वभूतानि तारयति, स्थावरसमूहञ्च व्याप्य तिष्ठति। एतादृशो महिमा वर्णितः पुराकाले। पुरा गङ्गा स्वात्मानं परिष्कर्तुं नर्मदायां स्नातुम् आजगाम इति श्रूयते। दार्शनिकः टलेमिमहोदयः सर्वप्रथमं अस्याः नद्याः नाम उल्लिखितवान्। तटिनीयं द्वादशोत्तरत्रयोदश-

किलोमिटरपरिमितं स्थलम् अतिक्रम्य गुर्जरप्रदेशस्य भारुचाख्यं नगरं प्राप्तवती। सातपुराख्यपर्वतस्य विन्ध्यपर्वतस्य च समतलभूमौ प्रवहन्ती सती मध्यप्रदेशे सप्तसप्तत्युत्तरैकसहस्रकिलोमिटरपरिमितं स्थलम्, महाराष्ट्रराज्ये चतुःसप्ततिकिलोमिटरपरिमितं स्थलम्, मध्यप्रदेशगुर्जरप्रदेशयोः सीमान्ते पञ्चत्रिंशत्किलोमिटरपरिमितं स्थलं व्याप्य स्थिता। अस्याः नद्याः दैर्घ्यं द्वादशोत्तरत्रयोदशकिलोमिटरपरिमितम्। वैदेशिकैः इयं सरित् "नरवादा" इति नाम्ना व्यपदिश्यते। इयं "रेवा" इति नाम्नापि प्रचलिता अस्ति। इयं पूर्वतः पश्चिमदिशं प्रवहति। नद्यामस्यां बाणलिङ्गाख्यः प्रस्तरः प्राप्यते। उत्पत्तिस्थलात् पञ्चकिलोमिटरपरिमितस्थाने अमरकण्टकाख्यायां पर्वतभूमौ प्रविष्टवती। तत्रैव अन्याभिः लघ्वीभिः जलधाराभिः युक्ता सती दीर्घनदीरूपेण आत्मानं प्रकटितवती। अस्याः नद्याः विद्यते कपिलेश्वराख्यः जलप्रपातः, दुग्धधाराख्यः जलप्रपातश्च। सामान्यतः अयं जलप्रपातः" दुधधारा" इति नाम्ना तत्स्थाने प्रसिद्धः। नदीयं मध्यप्रदेशगुर्जरप्रदेशयोः विविधं साहाय्यं विदधाति, तस्मादेव इयं अनयोः प्रदेशयोः "जीवनरेखा" इत्युच्यते। भारतवर्षस्य सप्तसु पवित्रासु नदीषु नर्मदा अन्यतमा। गङ्गायाः अपि अधिकं पावित्र्यम् अस्याः नर्मदायाः इति रूढिः। उत्तरभारतदक्षिणभारतयोः सीमां निर्दिशति इयं तटिनी। पश्चिमदिशि सरिदियं ताप्तिनद्या सह प्रवहति। अस्याः उपनदीषु " हिरणाख्या", "वारणाख्या", "कोलाराख्या", चेत्यादयः प्रसिद्धाः। गङ्गायां स्नात्वा यथा पुण्यं प्राप्यते, नर्मदायाः तु दर्शनमात्रेणैव पुण्यं जायते इति जनश्रुतिः। तस्माज्ज्ञायते एव कीदृशं माहात्म्यं नर्मदाया इति। पश्चिमदिशि प्रवहन्ती इयं आरवसागरस्य खाम्बाताख्ये उपसागरे पतिता भवति।




***

# सिन्धुः

- **लक्ष्मीकान्तभट्टः**

अस्माकं भारतवर्षं बह्वीनां नदीनाम् आश्रयस्थलम् । नद्यः एव अस्माकं भूदेवताः । नदनद्योर्मध्ये अर्थगतपार्थक्यं किमपि नास्ति । किन्तु नदः पुंसि वर्तते; नदी स्त्रियां वर्तते तावदेव । तस्मात् ब्रह्मपुत्रादयः नदाः अपि च गोदावर्यादयो नद्यः इति । आगममन्त्रेऽपि सिन्धुरिति नदस्य उल्लेखः कृतः -

**गङ्गे च यमुने चैव गोदावरि सरस्वती ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इति**

ऋग्वेदः कासाञ्चन पौराणिकनदीनां वर्णनाम् अकार्षीत् । तेषु सिन्धोः अपि अन्तर्भावः अस्ति । ऋग्वेदीयसिन्धुः अधुना वर्तमानसिन्धुनदः इत्यङ्गीक्रियते । ऋग्वेदस्य परवर्तिस्तोत्रे विशेषरूपेण सिन्धुनदं बोधयितुं सिन्धुशब्यस्य

अर्थस्सीमाबद्धः कृतः । यथा नदीस्तुतिसूक्ते नदीनान्तालिकोल्लिखिता । ऋग्वेदीयस्तोत्रेषु सर्वासान्नदीनां स्त्रीलिंगे प्रयोगः कृतः । किन्तु सिन्धोः पुंसि व्यवहारः कृतः सर्वप्रथमे ऋग्वेदे । तस्य अर्थः आसीत् सिन्धुः सर्वासु नदीषु साहसिकः किञ्च सर्वासु नदीषु श्रेष्ठः ।




पाकिस्तानदेशस्य दीर्घतमो गुरुत्वपूर्णो नदः सिन्धुरिति । नदस्यास्य नामानुसारेण भारतस्य नाम आङ्गलभाषायाम् इण्डिया अपि च फार्सि भाषायां हिन्दः हिन्दुस्तानं वा जातम् । सिन्धु नदस्य सिन्धुत्वेनापि प्रसिद्धिरस्ति । नदोऽयं मानससरोवरस्य पार्श्ववर्ती अस्ति । अयं पाकिस्तानस्य दीर्घतमः राष्ट्रियनदश्च । नदोऽयं देशत्रये अवलोक्यते । अस्य पाकिस्तानमध्ये ९३ शतांशः दृश्यते । भारतमध्ये ५ शतांशः दृश्यते । चीनमध्ये २ शतांशः दृश्यते ।

पञ्जाबस्य लौकिकपरम्परार्थं नदोऽयम् ऐतिहासिकरूपेण गुरुत्वपूर्णतां भजते । द्वितीये सहस्राब्दे पञ्जाबप्रदेशीया जनाः ऋर्ग्वेदस्य स्तुतौ " सप्तसिन्धुः" इति नाम प्रदन्तवन्तः । सिन्धूपत्यकायामुद्भूतः प्रथमैतिहासिकेषु राज्येषु गान्धारः सौवीरराजवंशः अन्तर्भुक्तः आसीत् इति शम् ॥

***

# कावेरी

**- रणितनायेकः**

**गङ्गे च यमुने चैव, गोदावरि सरस्वति।**
**नर्मदे सिन्धु कावेरिजलेऽस्मिन् सन्निधिं कुरु।।**

सप्तपुण्यतमनदीषु कावेरी अन्यतमा पवित्रा च नदी। एषा नदी कर्णाटकस्य कुर्गाद् प्रवहति। अस्याः सह्याद्रिश्रेण्या ब्रह्मगिरीपर्वतात् उद्भव अभूत्। कावेरी मुख्यतः दक्षिण-भारतस्य कर्णाटकराज्ये

तामिलनाडुराज्ये च प्रवहति। एतस्याः तामिलभाषायां "काविरी" "पोन्नी" चेत्यपि नामद्वयं विद्यते। कावेरीनदी दक्षिण- भारतस्य विभिन्नराज्येषु प्रवहन्ती

बङ्गोपसागरं यौति। अस्याः तटे नैकानि तीर्थस्थलानि तथा मन्दिराणि विराजन्ते। कर्णाटकं, तमिलनाडुः, केरलञ्चेति त्रयाणां राज्यानां भूभागं समृद्धयन्त्याः कावेरीनद्याः गङ्गानद्या इव पूजनीयता विद्यते दक्षिणप्रदेशे। एषा कावेरी नदी

दक्षिणभारतस्य अनेकस्थानेभ्यः पेयजलं कृषिक्षेत्रेभ्यः जलसेञ्चनञ्च प्रयच्छति ततः अस्याः जीवनरूप- जलस्य प्रदानेनैव दक्षिणप्रान्ते अर्थव्यवस्था सशक्ता सुसमृद्धिश्च भवति। अत एव एषा कावेरीनदी दक्षिणभारते गङ्गा इत्यपि अभिधीयते।

एतस्याः नद्याः विषये नैकाः पौराणिककथा विद्यन्ते यासु एका उच्यते। कदाचित् दक्षिणप्रदेशः




जलविहीनः आसीत्। तं सजलीकर्तुम् अगस्त्यमुनिः ब्रह्मणः आशिषा, महादेवशिवस्य पवित्रजलकमण्डलुं स्वीकृत्य भूमौ आगच्छत्। ततः नद्याः निर्माणार्थम् उचितस्थानस्य अन्वेषणे रतः स भारतस्य दक्षिणभागं प्रति प्रवासं कुर्वन् कोडगुप्रदेशस्य गिरिभागम् आगतः। देहबाधापीडितः अगस्त्यः शौचार्थं स्थानं पश्यन् आसीत्। तदा स मार्गे गमनसमये कञ्चन बालकम् अद्राक्षीत्। स वस्तुतः वेषान्तरितः गणेश आसीत्। स तं बालकं दृष्ट्वा तस्मै कमण्डलुं दत्त्वा तस्य रक्षणायादिश्य शौचार्थं जगाम। गणेशः जानाति स्म यद् अगस्त्यमुनिः नद्याः उद्गमनार्थं स्थानस्य अन्वेषणे रतः इति। अतः तत्कमण्डलुं तत्रैव भूमौ स्थापयित्वा सः ततः इयाय। तदनन्तरं कश्चन काकः कमण्डलुं स्पृष्ट्वा तस्योपरि उपाविशत्। अगस्त्यमुनिः आगत्य कमण्डलोः उपरि काकं दृष्ट्वा यदैव तं धावयितुं येते तदैव तस्मात् जलधारा लघुधारारूपेण कावेरीनदी भूत्वा प्रावहत्। महाभारतस्य आदिपर्वणि अर्जुनः तीर्थयात्राप्रसङ्गे अत्रागत्य स्नातवान् इति उल्लिखितमस्ति।

भारतस्य अन्यनद्य इव दक्षिणभारतस्य एषा पवित्रनद्यपि प्रदूषिता। कावेरीनद्याः प्रदूषणं स्वीकृत्य नैकानि शोधकार्याणि जातानि प्रचलन्ति च सन्ति।विश्वविद्यालयेषु शोधकार्यानुसारेण निर्माणशालाभ्यो निर्गतजलैः नद्याः जलं विषाणुसंसिक्तं दूषितं च दृश्यते येन दूषितजलपानेन स्वास्थ्यं नश्यति।

नराः रुग्णाः भूत्वा पञ्चत्वं च यान्ति। अत वयं यदि जलसंरक्षणे सावधानाः भवेम तदैवास्माकं जीवनं शान्तिमयं सुखमयञ्च भवितुं शक्नोति। अत एव अस्माभिः मनः शुद्धं कर्तव्यम्। यदि मनः निर्मलं भविष्यति

तदैवास्माकं विचाराः शुद्धाः, चिन्तनञ्च शुद्धं भविष्यति येन जलस्य विशुद्धिः अवश्यमेव भविष्यति। तस्मादेव कारणात् ऋषयः सततं कामयन्ते स्म यत् –

**यतो यतः समीहसे, ततो नोऽभयं कुरु ।शन्नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ।।(यजु.३६.२२)**



***